विशृयन्ते। ततः सूक्तमिदं सूत्रकारस्य, यत् 'तत्र भवनमासन्नोदक'-मिति।

यस्याञ्च दिशि सलिलमासन्नं तस्यामेव दिशि वृक्षवाटिकाप्रतिगतमपि तदुन्नाय्यम्। समीरणस्य च मन्दं मन्दं सञ्चरतः शैत्येन सौगन्ध्येन च गुणेन प्रतिजुष्टस्य संसङ्गः सम्प्रीणयति बहिरात्मानमन्तरात्मानञ्च शरीरिणां विश्वेषाम्, एकस्यैव समीरणस्य तथाभूतगुणद्वयसमागमस्तदैव सूपपन्नः स्याद्, यदि सलिलसम्बन्धिनीमेव दिशमधितिष्ठन्ती वृक्षवाटिका भवनमलङ्कुर्य्यात्। एक एव चासौ गुणद्वयसमुपचरितः समुपकरोति तथा शरीराणां यथा नैकगुणमात्रसमुपचरितोऽयम्। तत् 'वृक्षवाटिकाव'दित्यपि समीचीनं वचनम्। किञ्च भवनोद्याने ये किल समुत्पद्यन्ते पादपा लता वा, ते स्वपरिपोषाय समपेक्षन्ते यथाकालं सलिलसंक्रमं स्वेषु, स च तोयसन्निधानतः सुकरो न तोयव्यवधानेन, तत एव यस्यां दिशि तोयपरिस्थितिस्तत्रैव समुत्पाद्यमुद्यानम्, एवं कृते सुकरमुद्यानपालैः पादप-लतादिषु समुत्पन्नेषु स्वच्छन्दं सलिलसेचनेन परिपालनञ्च परिपोषणञ्चामीषाम्। यदृच्छासमुपजातसञ्चारः समीरणोऽपि समुत्प्लवमानः सलिलतरङ्गेषु समाहृत्य तदीयशीकरसङ्घातं सम्पोषयितुमलं सम्पद्यते वृक्षवाटिकां भवनशोभादिसाधनभूताम्।

केलिपराः किल नागराः केलिकलासु रममाणास्तत्तदेव पदं वा वस्तु वा स्वस्तिकामाः कामयन्ते, यत्र यत्र सौकर्य्यं वरीवर्त्ति केलिकलानाम्। अत एव सलिलकेलिकौशलं वा प्रमोदोद्यानविहारं वा प्रमोदाय प्रत्यहमत्याग्रहेण कामयमानानामुपयुज्यते नागराणामागारसन्निहितः सरोवरो वृक्षवाटिका चेति निरपवादो राद्धान्तवादः। नागरिकाः करेण समुपादाय करण्डिकां लतानुपातं पादपानुपातञ्च सञ्चिन्वन्ति लतान्तसम्भारं, सुसञ्चितेन चानेन स्रजं सृजन्तः स्वयं वा समामुञ्चन्ति विमण्डयन्ति वा तया विविधप्रसूनसुभगया सौभाग्यवत्या

युवत्याः प्रणयिण्याः कवरीबन्धम्। यथाकालञ्च समर्चयन्तः स्रक्-मभीष्टदेवं समाहृतैः प्रसूनोपहारैः सुसज्जितैश्च पत्रपल्लवादिपूजोपकरण-सम्भारैरलमनुकूलयितुमात्ममनोरथान् संख्यातीतान्।

वृक्षवाटिका हि नाम क्षमा पञ्चैव ज्ञानेन्द्रियाणि सन्तर्पयितुं नागराणाम्। तथाहि तत्र समुत्पन्नाः समासन्नश्यामलपत्रा नमेरवो रमयन्ति नेत्राणि श्रेणिशो विराजमानाः सविधे रसवेदिनां बहुल-बहुमानाः। प्रतिपादपं प्रतिलतञ्च प्रसूनरसपाटच्चराणां भ्रमराणां सुमधुराणि सङ्गीतानि माधवीं परिस्थितिं परितः प्रचारयताञ्च पञ्चम-स्वरैः सहकारमञ्जरीजड़ीकृतकण्ठानां कलकण्ठवैतालिकानां समी-षाञ्चापरेषामतिमात्रसन्तोषणाः कलस्वनाः सन्तर्पयन्ति सौभाग्य-दर्पमात्मनः परितः संसर्पयन्तः श्रवणेन्द्रियं निस्तन्द्रसञ्चाराः। सौरभ-सम्भाराश्च प्रसूनानां सम्भृतमकरन्दविन्दूनां दूरादपि समीरणपथमनु-वर्त्तमानानां सन्निधानतः परागाणां रागयोगादिव जनयन्ति घ्राणे-न्द्रियपरितृप्तिमविलुप्तसाराः। पादपा लताश्च ललितललितां परि-णत-फलसमृद्धिमादधानाः काले काले समुत्पादयन्ति तृप्तिं रासनिकीं सुमधुरफलरसनिर्वपणेन नानाविधमूलस्वादप्रदानतो निरवद्यभोजन-निर्वर्त्तनाच्च भावनिकानाम्। कुसुमसम्पदश्च सुकोमलाः शयनाय कल्प-मानाः सम्पादयन्ति परितोषं त्वाचं व्यजनवातसदृक्षश्च दक्षः समीरणः काननान्तसञ्चारो प्रपञ्चयत्याराद‍ेनम्। एवमेव भावनिकानां पञ्चे-न्द्रियसन्तोषणसमर्थो वृक्षवाटिकाया इत्यत्र को वा वालिशोऽपि परं विप्रतिपद्येत।

सरोवरादेरपि तदासन्नस्य पञ्चेन्द्रियपरितोषणं प्रतिष्ठेति नैतदपि दुरुपपादम्। तथाहि सनिर्मले तदासन्ने सलिले मृदुलानिलप्रति-लब्धजन्मानो रिङ्गन्तस्तरङ्गाः सलीलसञ्चारैः सारस-कारण्डव-दात्यूहादि-जलचरपतङ्गसङ्गता व्याकोशकोकनद-कह्लार-शैवाल धवलोत्पलपलाश-शवला नेत्रयोः, सारसादि-निनादमधुरिमा श्रोत्रयोः, विकचकमलादि-

जलज-प्रसूनसौरभाणि घ्राणस्य, मधुर नीरमाधुर्य्यं तथा मृणालादिसमास्वादनस्वरसो रसनायाः, सुशीतलसलिलशीकरवाही च समीरणस्त्वचः, परमं परितोषमावर्जयन्तीति। तदेवं वृक्षवाटिका च तदासन्नमुदकञ्च सम्भावयतो भावनिकं भव्यमिति सूपपादितं भवति। अत एव हि समुपादिशद् भगवान् वात्स्यायनो 'भवनमासन्नोदकं वृक्षवाटिकावच्चे'ति।

भवने कक्षाविनियोगोऽपि विमृश्य क्रियमाणो हिताय च सौष्ठवाय च परिकल्पेत, विमर्शमन्तरेण व्यपास्तनियमं क्रियमाणस्त्वन्यथैवेति तत्राप्याह 'विभक्तकर्म्मकक्ष'मिति। तथाहि भवनं नाम द्वेधा भवितुमर्हति ;—गृहमयमविभक्तकर्म्मकक्षं, तथा विच्छिन्नान्तरं विभक्तकर्म्मकक्षमिति। गृहाणाम् आन्तरालिकाविच्छेदे महदसौकर्य्यं भवति कार्य्यमनुतिष्ठतां गृहवताम्। कथम्? भवने खलु प्रवर्त्तन्ते नानाविधानि कृत्यानि प्रत्यहं गृहपतीनां सूक्ष्मतमविचारसव्यपेक्षाणि, तानि च तदैव निष्प्रत्यूहमर्थवन्ति, यदि विचारान्तरेण नान्तरा प्रतिहन्येरन्। अतः कृते भवने विभक्तकर्म्मकक्षे यथा दाक्ष्येण शक्यसम्पादः कर्म्मविचारः समीचीनेन पथा सूक्ष्मो, न तथा कथमपि कृतेऽविभक्तकर्म्मकक्षे।

बहुभिरेकत्र न वस्तव्यम्। बहूनामेकत्र कक्षायामवस्थानं नाम न हितायेति शारीरतत्त्ववेदिनो वैज्ञानिका अपि समामनन्ति। अतः कर्म्मकक्षाणामविभागे यथा परस्परं कर्म्मणामुपघातस्तथा शरीरस्वस्तिप्रत्यूहोऽपीति सुविचिन्तितः पन्थाः। तत् कर्म्मोपघातविनिवृत्तये शारीरस्वस्तिसम्पत्तये च भवनमुपयुक्तं विभक्तकर्म्मकक्षं, न त्वन्यादृशमपीति।

किञ्च भोजनगृहं शयनगृहं मलोत्सर्गगृहं कर्म्मविचारगृहं स्नानगृहं परिच्छदगृहञ्चेत्येतानि नानैव कर्म्मभेदेन गृहाणि सम्भवेयुः। तत्र यद्येकमेव गृहं सकलकृत्यनिर्वाहाय परिकल्प्येत, तस्य च बृहत्तया स्थानोपरोधादिदोषोऽपि नैव पदं कुर्य्यात्, तथापि कोलाहलादिकृतः कर्म्मविचारोपघातः स्वास्थ्यहानिश्चेत्युभयोरतिक्रमो दुष्कर एव

समापद्येत। अन्यदप्यस्ति किल भवनस्य विभक्तकर्म्मकक्षतामधिकृत्यानुसन्धेयं, यद्धि नागरकवृत्तमनुवर्त्तमानानामपि सामाजिकपरिस्थित्यङ्गीकारेण नोपेक्षणीयं भवति। तच्चेदं, नागरकाः खलु यथाकालं भोजनशयनादिकमिव नियमेन नानाविधं कलानुशीलनं क्रीड़ापाटवादिकं कामसूत्रवृत्ताभ्यासमप्यधिकुर्वीरन्, तदिदं सर्वमशक्यानुष्ठानं सन्निधाने श्रद्धेयानां गुरूणाम्, तस्य सर्वस्य गुरुनयच्छाद्यैव नागरकैरनुष्ठेयत्वेन कर्म्मकक्षा विभजनीयाः, येन गृहान्तरमधितिष्ठन्तः श्रद्धेया गुरवः शक्या अन्तर्धापयितुम्, शक्यश्च तेभ्यः कर्म्मप्रच्छादनमायासमन्तरेण समुपपादयितुम्।

अन्यच्च नागरकवृत्तमनुवर्त्तमानैरपि शारीरमान्तरं परिजनोपस्पर्शि च भद्रं बहुमन्यमानैः सुविधेयत्वेन दैवतपरिपूजनादीनां चैमिकविधीनां पृथगेव कल्पनीयं देवगृहम्। असति नाम विधिभेदेन गृहभेदे देवादीनां पावित्र्यपरित्रासः प्रसज्येत। व्याक्षेपविनिर्मोकेण विधातव्ये च सम्यग् देवाराधने विषयान्तरसम्पतनसम्पादितः प्रत्यूहः प्रतिहन्त्येव क्षेमप्रतिलम्भम् इति युक्तमिव भवनं 'विभक्तकर्म्मकक्षम्'।

तच्च पुनरनुकूलं द्विवासगृहमेव। यत् किल भवनं सूक्तं नागरकाणां, तत्र वासगृहद्वयम्, एकं वाह्यमपरमाभ्यन्तरञ्चेति। वाह्ये वासगृहे तौर्य्यत्रिकादिव्यापाराश्च वाह्यसुहृदां नर्म्मपरिहासाश्च क्रीड़ानुशीलनव्यायामाभ्यासप्रभृतीनि वाह्यकृत्यान्तराणि च प्रवर्त्तेरन्। आभ्यन्तरे पुनः प्रियासंलापादयो रहस्यव्यापारा इति वासगृहद्वयमेव समीचीनमास्ते। टीकाकृतस्तु 'द्विधा वासगृहमिति शयनार्थेन रत्यर्थेन च युक्तम्' इत्युक्तवन्तः, वयन्तु 'विभक्तकर्म्मकक्ष'मित्यनेनैव तस्यार्थस्य गतार्थतया न तमर्थं बहुमन्यामहे। द्विवासगृहमित्यत्र द्विशब्दस्य उपलक्षणतया अनेकानि वासगृहाणि कल्पनीयानीति तदर्थः प्रतीयते। आभ्यन्तरं वासगृहं खलु निकेतनमन्तः स्त्रीणाम् इति। अनेन प्रागवरोधनियमोऽपि व्याख्यातः। तदिदं सूत्रं सकलार्थसंग्रा-

हकं व्यतानि भगवता वात्स्यायनेन,—'तत्र भवनमासन्नोदकं वृक्षवाटिकावद्विभक्तकर्म्मकक्षं द्विवासगृहं कारयेद्' इति। तदयं विधिः सादरमादेयो निधिरिव नितरामप्रतिनिधिः सुधीनागरकाणामिति।

[ सावशेषम् ]

---

## "परिषच्छात्रसमिति"-नियमावली

१। अस्याः समितेः परिषदङ्गतया "परिषच्छात्रसमिति"रित्येव नाम स्यात्।

२। परिषद्विद्यालयस्य सर्वे विद्यार्थिनो नियमेनास्याः समितेः सभ्यपदं गृह्णीयुः।

३। विभिन्नविद्यालयाध्यापकैः स्वीय-विद्यार्थितया विज्ञापिताश्छात्रा अपि अस्याः समितेः सभ्यपदमर्हेयुः।

४। अस्याः समितेः सभ्यपदग्रहणे किमपि शुल्कं नापेक्ष्येत।

५। अस्याः समितेरधिवेशने निबन्धा व्याख्यानानि पारस्परिकसंवादाश्च संस्कृतां वाचमेवोपजीवेयुः।

६। एतस्याः सम्बन्धिनो निबन्धादयः सर्वे एव विशेषतो विद्यार्थिनाम् उपकारम् अनुरुध्येरन्।

---

## सन्देशाः

**अभिनन्दनम्—**विदितमिदं श्रीमतां पाठकमहाभागानां यथा माननीयाः श्रीमन्तः परिषत्सम्पादका अमरेश्वरठाकुर-एम्. ए. वेदान्तशास्त्रिणस्तथा श्रीयुक्त-गङ्गाचरणकर-एम्-ए महोदयाः श्रीयुक्त-

सुशीलकुमारमैत्र-एम्-ए महोदयाश्च 'पि एच् डि' इत्युपाधिं लब्धवन्त इति। वर्त्तमाने मासे परिषदि बहवः सुपण्डिताः सङ्गत्य तदभिनन्दनं कृतवन्तः, तत्र माननीया बहवः सुव्याख्यातारः समभिनन्दनीयानाममीषां गुणप्रतानमधिकृत्य संस्कृतमयं बङ्गभाषामयञ्च व्याख्यानं कृतवन्तः, तेषु श्रीमदनन्तकुमारशास्त्रि-श्रीमदादित्यनाथमुखोपाध्याय-महामहोपाध्याय-श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थ-महामहोपाध्याय-श्रीयुक्त-भागवतकुमारशास्त्रि-श्रीयुक्त-चूणीलाल वसु श्रीयुक्त यतीन्द्रनाथवसुप्रभृतीनां नामानि सगौरवमुद्घोषणीयान्येव। अभिनन्दनीयेषु च सुशीलकुमारमैत्रमहोदयः सुतरां शारीरामयेन कृतविघ्नो नोपस्थितः। द्वौ चापरौ समुपस्थितौ कृतस्य चाभिनन्दनस्य सप्रश्रयमुत्तरं दत्तवन्तौ। तस्य च साङ्गतासम्पादनाय कृतः परिषच्छात्रसमित्या 'उन्मत्तराघव'नामकस्य भास्करकविकृतस्य प्रेक्षणकस्य तथा श्रीकालीपदतर्काचार्य्यकृतस्य स्यमन्तकोद्धारव्यायोगस्य प्रयत्नयोगेन सुप्रयोगः। येन न केवलमभिनन्दनीयास्ते परमन्येऽपि सामाजिकाः परां प्रीतिमुपलब्धवन्तः। इति शम्।

**पुस्तकप्राप्तिः**— विदाङ्कुर्वन्तु श्रीमन्तः पाठकमहाभागाः! यत् सामन्तसारग्रामात् परिषदा बहवो हस्तलिखितग्रन्था गभीरार्थपूर्णाः सुदुर्लभाः परिप्राप्ताः। येषामौदार्य्येण साहायकेन च ते समधिगतास्तेषु संख्यातीताः साधुवादाः परिषदा वितीर्य्यन्ते। एवं किल शास्त्राणि परिरक्षितानि स्युः, अन्यथा कथमप्रतिरोधः शास्त्रविलोपस्येति। सन्ति किल तथा बहवो जना ये स्वभवने स्थितानां प्राचीनानां हस्तलिखितग्रन्थानां प्रत्यहं परिक्षयमयत्नकृतमुपेक्षन्ते, ते सनिर्बन्धमस्माभिरनुरुध्यन्ते यथा, परिरक्ष्यन्ताममी ग्रन्था भारतगौरवहेतवः संस्कृतसाहित्यपरिषद्ग्रन्थागारे तेषां समर्पणेनेति।

———

# इदं स्थानम्

# वि ज्ञा प ना र्थं व र्त्त ते

## संस्कृत-साहित्य-परिषद्ग्रन्थमाला

### मुद्रापित-ग्रन्थाः

| | | मूल्यम् | | | |
|---|---|---|---|---|---|
| २। | कालीतन्त्रम्—सटीकानुवादम् | साधारणानाम् | ॥/०) | सदस्यानाम् | ।०) |
| ३। | मञ्जरीसङ्गीतम् | ,, | ।/०) | ,, | ।/०) |
| ४। | मुक्तिवादः—गदाधर-भट्टाचार्य्यविरचितः, सटीकाद्वय-भाष्यानुवादसहितः | ,, | २) | ,, | २॥० |
| ५। | दुर्गापूजातत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम्, शारदीयदुर्गोत्सवप्रमाणप्रयोगतत्त्वरूपम् | ,, | ३।० | ,, | ,, |
| ६। | पितृदयिता—अनिरुद्धभट्टकृता, सामवेदीय-सन्ध्या-श्राद्धादिपद्धतिरूपा | | १।०) | ,, | १) |
| ७। | दुर्गोत्सवनिबन्धकदम्बम्—दुर्गोत्सवविवेकादि-ग्रन्थपञ्चकात्मकम् | ,, | ।०) | ,, | ।/० |
| ८। | कारकोल्लासः—भरत-मल्लिककृतः, सोदाहरण-कारकनिर्णयरूपः | | /०) | ,, | /०) |
| ९। | ऋग्वेदभाष्योपक्रमणिका—सायणकृता, भाषा-भाषाटिप्पणसमेता | | ॥०) | ,, | ।/०) |
| १०। | ग्रहयागतत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम् | ,, | ।/० | ,, | ।/० |
| ११। | प्रभाकरविजयम्—नन्दीश्वरविरचित-प्रभाकर-सम्प्रदायानुसारि-मीमांसाग्रन्थः | ,, | १।०) | ,, | १) |
| १२ | तीर्थतत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम् | ,, | ।/० | ,, | ।/० |
| १३। | पवनदूतम्—लक्ष्मण-सेन-सभाकवि-धोयीकविकृतम् | ,, | ॥०) | ,, | ।/०) |

| | | मूल्यम् | |
|---|---|---|---|
| | | साधारणानाम् | सदस्यानाम् |
| ४। नलदमयन्तीयम्—( सप्ताङ्कनाटकम् ) श्रीकालीपद-तर्काचार्य्यकृतम् | „ | १।०) | „ १) |
| ५। प्रशस्तपादभाष्यम्—जगदीश-सूक्तिसहितम्, नवीनया सूक्तिदीपिकया भाषाभाष्येण च समलङ्कृतम् | | २) | „ १॥) |
| ६। यात्रातत्त्वम्—श्रीरघुनन्दनभट्टाचार्य्य कृतम्, विष्णो रथयात्रादि द्वादशयात्रापद्धति-रूपम् | | ।) | „ ।० |
| ७। ऋक्प्रातिशाख्यम्—उवट भाष्यानुसारिण्या व्याख्यया समेतम् | | २॥० | „ २) |
| ८। प्रमेयरत्नावली—बलदेव-विद्याभूषणकृतो वैष्णवदर्शनग्रन्थः | | १।० | „ १) |

## मुद्राप्यमाणा ग्रन्थाः

१। आनन्दलतिका ( चम्पूकाव्यम् )—दम्पतिभ्यां जयन्ती-कृष्णनाथाभ्यां विरचिता।
२। छन्दोगमन्त्रभाष्यम्—भट्ट-गुणविष्णुकृतम्।
३। भाषारत्नम्—अभिनव-कणादकृतम्।

## मुद्रापणार्थं गृहीता ग्रन्थाः

१। समन्वया—अनूप-नारायणकृता ब्रह्मसूत्रवृत्तिः।
२। उद्वाहतत्त्वम्—रघुनन्दन-भट्टाचार्य्यकृतम्।

---

देवनागराक्षर-मुद्रितनामानि पुस्तकानि देवनागराक्षरेण तथा बङ्गाक्षरमुद्रितनामानि बङ्गाक्षरेण मुद्रापितानीति बोद्धव्यम्।

---

Printed and Published by
Durgamohan Kavya-Sankhya-Puranatirtha, M. A.
Sanskrit Sahitya Parishat, Shyambazar, Calcutta.
Printed at
Siddheswar Press,
*39, Sukea Street, Calcutta.*

Reg. No. C. 1073.

१८५० शकीये चैत्रे — ११श-वर्षस्य १२श-संख्या

April, 1929. ] — [ Vol. XI, No. 12.

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम




सम्पादकः—श्रीकालीपद-तर्काचार्य्यः

सह-सम्पादकः—श्रीदुर्गामोहन-भट्टाचार्य्यः, एम्. ए.

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—३) रूप्यकत्रयम्
Foreign price—7 s.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

| April, 1929. | १८५० शकीये चैत्रे ११श-वर्षस्य १२श-संख्या | Vol. XI. No. 12 |
|---|---|---|


## वसन्तः

( पूर्वानुवृत्तः )

[ निबन्धकः—श्रीदशरथशास्त्री विद्याविनोदसिद्धान्तवागीशः ]

किमियमम्बुजास्याधरः(१) शुभः किमिह लोक्यते बिम्बिकाफलम् ।
न हि सुबन्धुकं सम्प्रफुल्लितं लसति दीप्तिमच्छोणविन्दुवत् ॥३३॥

पिककलस्वरोद्गानसादरा मधुपवल्लभ(२)प्रेङ्खमध्यगाः ।
सललितेङ्गिता भूषणक्वणा अलिगतागतैर्दोलयन्ति हि ॥३[illegible]॥

धृतसुमस्रजो लोलविग्रहा ललितदोलनाः सच्चलद्दृशः ।
अयनगा अपि प्रेक्ष्य मानसे सरणिविस्मृतिन्धारयन्ति च ॥३५॥

सुमितकिंशुकारण्यदर्शनात् पृथुनितम्बिनी स्वाङ्गलोचना (३) ।
पतिनखाङ्कनान्ताद्दृशोमिव सुपरिवृत्य चालोकते मुहुः ॥३६॥

---

(१) कमलाननाधरोष्ठः । (२) आम्रपादपप्रेङ्खमध्यगताः ।

(३) स्वाङ्गे कटिपश्चाद्भागे लोचने नयने यस्याः निहितकटिपश्चाद्भागनयने-त्यर्थः ।

यदि न शोकवान् पुष्पगते न किं मधुचलाघ्रिणी सीधुसेचनम् ।
विदधती मुखात्पङ्कजाङ्घ्रिणा प्रतिदिनं हठात्ताड़यत्यलम् (४) ॥३७॥
भ्रमरगुञ्जितं कोकिलारुतं कुसुममण्डितं वल्लरीयुतम् ।
मृदुदलाश्रितं कामिनीगतं (५) प्रवरशिञ्जितं शोभते वनम् ॥३८॥
सुमितकानने प्रेयसीयुता मधुरगुञ्जितैर्गाढरागतः ।
मधुगवेषणालोलमानसा मधुकरा मधौ सम्भ्रमन्ति हि ॥३९॥
किमुपरागतः शोकतोऽथवा किमिन(६)तापतस्तीव्रपानतः ।
भ्रमति चिन्तनात् पुष्पलिट्स्वहि रतवियोगतो धूसरच्छविः ॥४०॥
स्फुटितमञ्जरीभारशोभिते सुरभिपादपे(७) कानने स्थितः ।
कुह-कुह्रुतव्याजतः पिकः पथिकमानसं भेदयत्यलम् ॥४१॥
पिकरुतोन्मदा लोललोचनाः प्रवरमण्डनाः कामकामनाः ।
मधुरगीतिका वारिजाननाः परिचलन्त्यतः(८) पुष्पवासनाः(९) ॥४२॥
बकुलगन्धतो मत्तमानसा क्षिपति कन्दुकं पुष्पवाञ्छया ।
चयनसादरा शिञ्जितैर्गतैर्व्रजति फुल्लिताम्भोरुहानना ॥४३॥
सुमितमाधवीं याति कामिनी मधुपवृन्दकम्प्रेक्ष्य वेगतः ।
द्रवति चालिनी(१०)र्वो धवा(११) इमे वदति सङ्गता एतयाऽत्र(१२) धिक् ॥४४॥
कुन्दसन्निधौ चारुहासिनी रदनशोभया मा हसाधम !।
मृदुशयो (१३) न मे तेऽन्तिकं गतो हससि किं पुनर्वक्ति तं मुदा ॥४५॥

---

(४) अशोकमिति शेषः। दोहदोयमशोकस्य।
(५) कामिनीनां गतानि भ्रमणानि यस्मिन्।
(६) सूर्यतापात्।
(७) आम्रवृक्षाः सन्त्यस्मिन्।
(८) परिभ्राम्यन्ति।
(९) पुष्पाभिलाषिण्यः।
(१०) भ्रमरीः।
(११) युष्माकम् पतयः।
(१२) माधव्या वासन्तीलतया।
(१३) मृदुकरः।

तरुणि(१४) मालिके(१५) यूथिके जपे(१६) तुलसि सारदे(१७) फुल्लितानना: ।
सुरभिणा समं सङ्गता वने ननु न वेद्यहं मेति बोधत:(१८) ॥४६॥
अयि न हि त्रपा मानसे तव शितिगलोज्झिता(१९) तुच्छहासिनि ?
खरदला(२०)ऽधरा(२१)ऽसत्यवादिनी(२२) किमिति शोभसे भृङ्ग-सङ्गतः ॥४७॥
शृणुत चम्पकाशोकचित्रक(२३)तिलकनीपका(२४) ! देववल्लभ(२५) ।
सहचरी(२६)ड्रका(२७) मा प्रफुल्लत पररतास्मि नो नो स्मशामि वः॥४८
हसितपेशले(२८) रक्तपल्लवे(२९) मधुवरे(३०) सदा भृङ्गवल्लभे(३१) ।
रतरता(३२) स्थिता मोदमोदिता किमपि सल्लभे शर्मनिर्भरम् ॥४९॥

## (वृद्धवसन्तः)

लुलितलम्बितैः सूक्ष्मवृन्तकैर्लघुशलाटुकैः श्यामताङ्गतैः ।
दलविशेषकैश्चूतपादपैः स्थविरकान्तिभृद्धोवसन्तकः ॥५०॥

---

(१४) सेवन्ति । (१५) नेपालि ।
(१६) गुड़हर इति प्रसिद्धे ।
(१७) स्थलकमलिनि । सम्बुद्धान्ताः पुष्पजातयः ।
(१८) भ्वादिर्बोधति रूपमेतत् । (१९) शम्भु परित्यक्ता ।
(२०) कठोरपत्रा । (२१) नीचा ।
(२२) मिथ्याभाषिणी । (२३) मुचुकुन्दः ।
(२४) कदम्बः । (२५) पुन्नागः ।
(२६) कुरण्डकः । (२७) जपा ।
(२८) पुष्पितेन हसनेन वा चारौ ।
(२९) शोणदले वा अनुरागयुक्तशरणयोर्विलास उत्सवो वा यस्मै तले-त्यर्थः । रक्तोऽनुरक्तो नील्यादीति मेदिनी । लयः कालभिदि च्छिदि । विलास इति हैमः ।
(३०) वसन्तदूत आम्रे चीरभद्रके वा । मधु चौद्रे जले चौरे इति विश्वः ।
(३१) भ्रमरप्रिये तत्सम-दयिते वा । (३२) मन्दरता ।

शिथिलवाशितैर्भ्रमानसैः शुकपिकादिभो रुचगुञ्जितैः ।
अलिकदम्बकैः चोणकान्तिमाञ्जयति हृद्यवच्छ्रीवसन्तकः ॥५१॥
अनुदिनेद्धभो भानुमानयं करनिपाततः खेदयञ्जनान् ।
विहृतिमन्दतां बोधयन् परां सुरभिहृद्यतां ख्यापयत्यलम् ॥५२॥
पथिकमानवैः स्वेदविन्दुभिर्ल्लंपितविग्रहैः प्राज्ञ एव च ।
चलितुमुत्सुकैर्न्नाप्यते परा सुरभिवृद्धता काश्यपीतले ॥५३॥
जरठसम्पदं श्रीवसन्तकं नवसुयौवनाः प्रेक्ष्य चाकुलाः ।
विहृतिवासनात्यागमानसा मृदुतया गृहं नो त्यजन्ति हि ॥५४॥
प्रफुल्लितः पेशलपल्लवाधरो हरिद्दलाच्छादितकाण्डविग्रहः ।
द्विरेफगुञ्जारवसुन्दरस्वरो ददातु सौख्यं सुरभिर्धरातले ॥५५॥

——

## अभिभाषणम्

( पूर्व्वतोऽनुवृत्तम् )

[निबन्धकः—महामहोपाध्यायः श्रीभागवतकुमारशास्त्री ]

वेदान्तिनोऽत्र चिदचिद्रूपस्य द्वैतस्य परस्परविलक्षणस्य कथञ्चिदपि संयोगादिसम्बन्धासम्भवात् प्राक्तनं तत्त्वं निखिलमेवाधिष्ठानभूते परमात्मनि समनुप्रावीविशन् । जीवात्मनश्चापि तथैव ते विदधुः । एवं प्रक्रियया वेदान्तमते सर्वात्मकं निर्विशेषचिद्रूपं ब्रह्मैकं तत्त्वमिति ख्याप्यते । ज्ञातृज्ञेयमूलकोपाधिप्रक्रियाभेदादखिलजीवजड़भेदव्यवहारसिद्धिः । उपाधिः पुनस्तस्यैव ब्रह्मणो मायामात्रम् । माया तं परमात्मानमेव समाश्रित्य जीवस्याविद्यापरम्पराकारणीभूता सर्वत्र वरीवर्त्ति, परं ब्रह्म तु मायातीतं स्वप्रकाशे प्रतिष्ठितं विराजते । अस्त्येवं संसारव्यवहारो जीवानां मायावशात् । तन्मूलकञ्च सर्वं कर्मतन्त्रम् । लोकतन्त्रे तस्योपाधिसमावृतस्य ब्रह्मचैतन्यस्य परिज्ञानार्थं ज्ञेयज्ञातृभावग्रस्ताया बुद्धेर्विशदीकरणमावश्यकम् । तत्रैव

च सृष्टिमर्य्यादाविधिबोधकं वैदिकं कर्मतत्त्वमधिकृतं साधनतया सत्त्वसमुद्दीपने। ततश्च वेदान्तरीत्या सर्वं वैधं कर्म सर्वव्यापि-मनुष्यत्वान्तराले ब्रह्मैकत्वं समुद्बोधयत् तादृशकर्मकर्त्तॄणां ब्रह्ममयत्वं विस्फारयति। किञ्च वेदान्तिमते प्राकृतजड़ांशस्य मायामयत्व-प्रतिपादनात् सर्वत्रैकब्रह्मभावस्फुरणे नैवान्तरायबाहुल्यम्। एवं खलु वेदान्तिनः कर्मतत्त्वगत्या सर्वगतं मनुष्यत्वं देवत्वे पर्य्यवसाययामासुः। परमत्रौपनिषदानां व्याख्यातॄणां नये मायायाः सर्वथा मिथ्यात्व-प्रतिपादनाज्जीवजड़योर्मायोपाधिग्रस्तयोरलीकत्वप्रतिभासनाद् रिक्त-प्रायं जातमिदं सर्वगतदेवत्वम्। सर्वत्र ब्रह्मभाव उपदिश्यते, सर्वं तु विहन्यत इति स्वत एवासिद्धं जातमिदं तत्त्वं लोकदृष्ट्या। प्रागप्युप-निषद्भागे तत्त्वमिदं पुनः पुनर्विमर्शितमपि, निर्विशेषाणां कर्म-न्यासिनामुपादेयमपि लोकयात्रायां नैवोपयोगीति न लोके सुप्रतिष्ठां गतम्। बहुधा विभक्तानां योगानां सांख्यानाञ्च नयेषु जड़स्य वैचित्र्य-बोधिकाभिर्जड़शक्तिमात्रस्य निखिलकार्य्यकारितां निरूपयन्तीभिः प्रेक्षावन्मोहकरीभिर्जल्पनाभिर्मुग्धप्रायाणां भारतानां तत्त्वबुद्धिसमु-द्दिधीर्षया शास्त्र-योनेर्नित्यशुद्धबुद्धमुक्तचैतन्यस्याद्वयस्य सर्वात्मकस्य समुपदेशेन भगवता व्यासेन शास्त्रमूलं पुनरुज्जीवितमेवेति निःसं-शयम्। तथापि तु शास्त्रीयधर्मज्ञाने तत्प्रसादात् पुनरुद्बुद्धा भारताः शास्त्रस्य सत्यात्मकत्वमेव सुप्रतिष्ठितं भवत्वित्यपेक्षाञ्चक्रिरे। अहो सांख्यानुसारिभिस्तावत् कर्मतत्त्वस्य परममङ्गलनिदानत्वमपाकृत-मधुना वेदान्तानुसारिभिः पुनस्तस्य पारमार्थिकदृष्ट्या तुच्छत्वमेव प्रतिपादितम्। तर्हि किं विधिबोधितकर्मणामपि नैवास्ति जगति विशिष्टोपयोगिता? आत्मप्रीतौ विश्वप्रीतौ नैवास्ति केषाञ्चित् कर्मणां पर्य्याप्तता? कथं तर्हि नराः कर्मसु स्वतः प्रवर्त्तेरन्? ज्ञानवादिनां सांख्य-पातञ्जल-वेदान्तिनां तत्त्वविश्लेषणविधाभिरेवं संशयकोटिमारूढ़े भारतसमाजे भारतवर्षे मधुरमधुरो भक्तिवादः प्रादुर्बभूव। कथं

निःसाराणामपि कर्मणां धर्मकृतेऽनुशासनं युज्यते ? नैव युक्तञ्चेत् कथं मया भारतव्यपदेशेन तादृशधर्मकीर्त्तनं कृतम् ? अपि नाम यद् यद् योगव्याख्यानप्रसङ्गेन ब्रह्मसूत्रसमुद्धारणेन च परमार्थतत्त्वमुद्घोषितं, तत्तत् क्षेमाय भवति ज्ञानमार्गिणाम् ? मन्ये सात्त्वत तन्त्रमिव भगवद्भक्तियुतकर्मणां नैष्कर्म्यभावप्रापकं श्रेयः। इति नातिप्रतुष्टचित्तस्य भगवतो व्यासस्य परमेश्वरप्रणिधानरतस्य सम्यक् प्रणिहितेऽमले भक्तियुक्ते मनसि भक्तितत्त्वोज्जीवकं पूर्णतमं सत्यं प्राविरासीत्। ततश्च भगवता लोकेऽस्मिन् प्रचारितं तत्तत्त्वमिति पौराणिकानां वार्त्ता। पुराणेषु विशेषतः श्रीमद्भागवते महापुराणे समुद्घोषितं तत्तत्त्वमिह किञ्चित् परिज्ञाप्यते।

निखिलानां वाह्यानामान्तराणाञ्च भावानां चरमे ज्ञाने प्रतिष्ठानात् सर्वं खल्विदं ज्ञानात्मकमेवास्तु। चरमं तु तज्ज्ञानं नेति नेतीतिरीत्या यत् सत् प्रतिपाद्यते तेन सहैवैकभूतम्। अत एव चिन्मयेन तत्त्वेनाद्वय-ज्ञानरूपेण जगदिदं वाह्यान्तरं बृंहितमिति सुवचम्। तदात्मकत्वात्तेनैव सर्वं नियन्त्रितमित्यपि सुबोधम्। स च नियन्ता जगतो निदानभूतशक्त्यात्मकः पूर्णतेजोमय इति हिरण्यगर्भाद्याख्यया हैरण्यगर्भैरुपास्यते, परमात्मेति च कीर्त्यते। औपनिषदैर्वेदान्तिभिः पुनर्ब्रह्मेति शब्द्यते स्वरूपपरिचयाख्यया। एकस्य तत्त्वस्यैवं दृष्टिभेदाद् द्वैविध्यं यथातथं समीचीनञ्च। किन्तु लोकदृष्ट्या नैकतरस्यापि भावस्यानुगुण्यं प्रतीयते। विरज्यमानाः संसारकर्मभ्य आपातसमुद्वेजकेभ्यो हिरण्यगर्भाद्युपासनया वा ब्रह्मसमाधिना वा कृतकृत्यतां लभन्ताम्। संसारतन्त्रेषु पुनः स्वभावबलादेव कर्मसु जीवाः प्रवर्त्तेरन्। वेदमूलकस्य कर्मतन्त्रस्य दोषानाविष्कुर्वद्भिरन्यत् किमपि लोकमङ्गलं लोकोपयोगि च कर्मतन्त्रमुद्घोषणीयम्। किञ्च यस्मिन्नेव चरमप्रतिष्ठाने ज्ञानमद्वयं प्रतिष्ठितं, तत्रैव क्रियामात्राभिव्यञ्जितं सदपि विराजितम्। ज्ञानं यथा हृदये सन्धारणीयं, तत्त्वतस्तथा

कर्म्मापि भावनीयम्। कर्म्मणो नोदना नैवापाकर्त्तुं शक्यते। मनुष्य-कर्म्म समीचीनज्ञानचोदितं भवत्वित्येतावन्मात्रं कर्म्मण्यधिकृतम्। कर्म्म-विषये किं नाम तत् समीचीनं ज्ञानम्? भवेच्चेत् प्रचरत्सु वेद-भागेषु महाजनैरभ्युपगतेषु सर्व्वोपयोगित्वेन त्रैकाल्योपयोगित्वेन च विचिकित्सा, तदा शिष्टोपयोगि सर्व्वेषामप्यधिकारास्पदीभूतं परम-सत्यमूलकं सर्व्वमङ्गलाश्रयकर्म्मप्रवर्त्तकं सज्ज्ञानं स्वमनीषया विचार्य्य-ताम्। नैतच्च दुष्करम्। प्रतिपुरुषं हृदि ज्ञानचैतन्यं सुप्रतिष्ठम्। विश्लिष्यतां तावत् किमात्मकमिदम्।

यो यश्चेतति, स स एव चेतनोऽस्मीति चैतन्यभावेन साङ्गं स्वास्तित्व-भावमप्यवधारयति। तथैवानुपदं तदस्तित्वमभिनन्दति साधु जीव्यते मयेति। एवं यथाकथञ्चिदात्मास्तित्वप्रतीतौ स्वाभिनन्दितृत्वभावस्य स्वचेतितृत्वभावस्य च समुल्लासः। स्वाभिनन्दने चापि स्वास्तित्व-प्रतीतिः स्वचेतितृत्वस्यापि समुन्मेषः। इत्थमन्योन्यमिथुनीभूतं सत्ता-ज्ञानानन्दरूपं स्वसंविदा प्रमाणीकृतम्। एकमेव चेतनतत्त्वं तत-स्त्रिधा प्रकाशमानं सच्चिदानन्दमयम्। जगन्मूलेऽपि तत्त्रैविध्यस्यानु प्रवेशाज्जगतश्चेतयिता पुरुषः सत्तामय्या ज्ञानमय्याऽनन्दमय्या च त्रिरूपया शक्त्या श्लिष्ट इति स्वतःसिद्धम्। तदेव शक्तित्रयं सन्धिनी संवित् तथा ह्लादिनीति स्वरूपपरिचयक्रमेण व्यपदेशभाक्। प्रति-पुरुषमप्येतत् कार्य्यकृत्। यया भवति भावयति, यया जानाति ज्ञापयति, यया नन्दति नन्दयति तदेव त्रयं पुरुषं धारयति, धारणाच्च धर्म्म इति। एवं सति यद् यल्लोकानां भवाय ज्ञानायानन्दाय च तत्तदेव पुरुषस्य मूलप्रणोदनामूलकमिति स्थितम्। कथमहं वृत्तिं लभेय, कथं वा जगद्वृत्तिं लभेत, कथं ज्ञानमर्जयेयं, कथं वा जगत् ज्ञानमर्जयेत्, कथं प्रीतिमाप्नुयां, कथं वा जगत् प्रीतिमाप्नुयात्, एव-मेवं प्रणोदना पुरुषस्य स्वभावसिद्धा।

ननु सर्व्वज्ञानमयस्य सर्व्वसत्तामयस्य सर्व्वानन्दमयस्य च जीव-

हृदये नियतमधिष्ठाने, जीवस्य च तत्त्वतस्तद्रूपत्वे, कथं तस्य वृत्ति-संकोचो ज्ञानसंकोच आनन्दसंकोचश्च ? यदि संकोचो न स्यात् प्रणोदनापि न स्यात्। संकोचोऽयं कथमुपानीत: ? समीचीन: खल्वयं प्रश्न:। समाधानन्तु सच्चिदानन्दस्य परमात्मनो जीवस्य च तत्त्व-विमर्शनेनैव सेत्स्यति।

परमात्मैव जीवकलया प्रविष्टो जीव इति सत्यम्। तथा च पुरुषास्तस्यैव नित्यांशरूपा इति च सिद्धम्। अत एवोक्तं स्वयमेव पुरुषोत्तमेन 'ममैवांशो जीवलोके जीवभूत: सनातन' इति। तथापि तु सच्चिदानन्दभावस्य चरितार्थतालाभायैव—सन्धिन्या: संविदो ह्लादि-न्याश्च कार्य्यकारितालाभायैव—परमात्मना परमेश्वरेण जीवकर्म प्रवर्त्तितम्। इदं तस्य सच्चिदानन्दस्वभावसिद्धं स्वविनोदमात्रं लीला-रूपमिति सुस्पष्टमेव। सैव लीला मायेति व्यपदिश्यते। सृष्टि-कारणमयत्वाद् विड़म्बनप्रायत्वाच्च मायैवेति। स्वयमेव स्वत एव सिद्धं साध्यकोटिमारोप्य साधयितुं प्रवर्त्तत इत्यत्र विड़म्बनवीजम्। सर्व्वज्ञस्यात्मनो ज्ञानमिह व्याहतप्रायं पुनश्च साध्यम्। सत्ता पदे पदे नष्टप्राया, पुन: पुनश्चोज्जीवनीया। प्रीति: क्षणे क्षणे खण्डितेव पुनरेव सन्धेया। त्रितयमेवं सदैव चेन्न व्याहन्येत, जीवजगतश्चेष्टित-मपि न स्यात्। चेष्टाव्यतिरेकेण च सच्चिदानन्दे स्वत:सिद्धानां तत्त-च्छक्तीनां शक्तिस्वरूपत्वमपि लुप्येत। अत एव जीवा मायावशं गता:। मायाप्रवृत्तिं विना कथं नाम ते स्वस्थितिचेष्टाभि: स्वज्ञान-चेष्टाभि: स्वानन्दचेष्टाभिश्च कर्मसु यतेरन् ? विना कर्म संसारचक्र-मपि नावर्त्तेत।

भवतु नाम जीवस्य मायावशात् संसारचक्रप्रवृत्ति:। किन्तु मायाप्रेरणासु यातनाश्च प्रत्यक्षीभूता:। कथं स्वस्वरूपाणां जीवानां दु:खसंवेदनायैव परमानन्दमयेन कर्मचक्रं प्रवर्त्तितम् ? एवञ्च तस्य परात्मन: परोक्षत: स्वानन्दनाश एव प्रसज्येत। मा मैवम्। दु:खं

दुःखमिति वृथा जल्पनमात्रम्। सुखस्य प्रणोदनायां सुखमेव साध्यं न दुःखम्। यादृशी भावना सिद्धिरपि तादृशीति सर्वसम्मतम्। दुःखमिति प्रतीयमानं रङ्गदुःखवन्न वास्तवं दुःखम्। रङ्गे व्यापृताः शैलूषाः सीतादिभूमिकाः समादाय सीतादिवद् वनवासादौ क्रन्दनादिना यद्दुःखमित्युपस्थापयन्ति, तदभिनयसौकर्य्यायैव। अन्तस्तु ते तदानीं तदानीं रङ्गक्रीड़ानन्दाप्लुताः। प्रकृतिरेवेयं रङ्गस्य यदात्मगोपनमिति। मायारङ्गे तथैव जीवानां सर्व्वज्ञतावरणं नित्यस्थिरताऽवरणं सदानन्दताऽवरणञ्च। एवं छन्नप्राये सच्चिदानन्दे ज्ञानाय जीवनाय सुखाय च प्रवर्त्तनम्।

अपरञ्च, यत्किञ्चित् स्वयं सिद्धं तत्र नैवानन्दयोगः। साध्यसाधनादेवानन्दस्फूर्त्तिः सर्वेषां प्रतीतिगोचरीभूता। परमेश्वरस्य लीलामयस्य भगवतो विनोदरङ्गप्रविष्टानां पुरुषाणां सत्ताज्ञानसुखमतोऽपि सदैव साध्यं भवति। यदा तत्तत् साधितप्रायमुपजायेत, तदा कर्मात्मनि निर्वृतिरप्युपतिष्ठेत।

आ संसारात् तर्हि नष्टानां सत्ताज्ञानसुखानां प्रतिसन्धानाभावात् कथं जीवानां सम्यग् निर्वृतिरिह साध्येत ? मन्ये सा नैव साध्येत,—कर्मप्रवाहस्य विरतेरभावात्। नहि नहि; कर्मप्रवाहे संप्लवमानस्यापि जीवस्य तन्निर्वृतिर्नैव दुष्करा। रङ्गपुरुषो यदा रङ्गभावेनैवाभिभूतस्तन्मयश्च, तदैव तस्य दुःखितापत्तिः। अन्तर्दृष्ट्या स तदानीमपि नैव दुःखी, किन्तु रङ्गकृतार्थताबोधात् प्रीतिमानेव लक्ष्यते। साध्वभिनीयते मयेति कस्य वा नटस्य न प्रीतिकरम्? पुरुषाणामप्येवं प्रतिसन्धाने संसारदुःखमपि न दुःखायते, प्रत्युताभिनयसार्थक्यस्फूर्त्तेः सुखायत एव।

केनोपायेन तावदीदृशं प्रतिबोधनं कर्मासक्तानां जीवानां सम्भवेत् ? निजस्वरूपशक्तिस्फुरणादित्यत्र नैव सन्देहगन्धः। परमेश्वरस्यांशभूतोऽहम्, अमुना रङ्गाध्यक्षेण यद् यत् किमपि किमपि कर्त्तुं प्रणो-

दितोऽहं तत्तदेव मम करणीयमिति तस्य किंकरोऽहम्। तच्च तच्च ममाभ्युदयाय भवेत्, सर्वस्य जगतश्चाभ्युदयाय भवेत्। स चाभ्युदयः सर्व्वेषां भूतानां जीवितव्य-विकाशे विद्यासमृद्धौ प्रीतिपरिपूर्त्तौ नितरामेवालम्। अयमेवोपायो भक्तिवादिभिरभ्युपेतः। अंशभागहं परात्मनो भगवतस्तस्य लीलारङ्गभागपीति भावनैव भक्तिर्भजतेर्धात्वर्थसंग्रहात्। यद् यद् जीवकर्म तादृशप्रेरणानुनोदितं तत्तदेव भक्तिसाधनम्। तत्तत्साधनभावनसाध्या याऽऽत्मनः पूर्णतास्फूर्त्तिः, सैव प्रेमप्रीतिप्रभृतिशब्दवाच्या। परमात्मेव कर्मणो लीलाभावनायां भगवानिति शब्द्यते भागवतैः। लीला च भगशब्दार्थ इति भागवतीयं व्याख्यानम्।

एवं स्थिते ये खलु वेदादिबोधितसदाचारपद्धतिषु सर्वथाभ्युदयकरीं स्वप्रीत्यनुरूपां कर्मनोदनां निरूप्य तत्र तत्रैव यतन्ते, तेऽपि भागवतानां सम्मता एव। प्रायेण भागवता अपि कर्ममार्गे तास्ताः पद्धतीरनुसरन्ति। या यास्तु पद्धतयः प्रीतिसाधनायां भागवतानां कथं कथञ्चिन्नानुकूला इव तास्तास्तैर्नैवोपादीयन्ते। कुत्र कुत्रापि च प्रतिसंस्कारविशेषास्तैरभ्युपेताः। भागवतानामाचारेषु सम्प्रदायभेदेनैवं रीतिबहुत्वं एव परिलक्ष्यते। यद् यत्रैव साक्षाद्देशकालाधिकारादिमानेन 'शिवाय लोकस्य भवाय भूतये' तत्तत्रैव भागवतैस्तत्तद्दिशा धर्मत्वेनाङ्गीकृतम्। आचारसार्थक्यं तावद्भगवतैव निर्दिष्टम्,—'एतावज्जन्मसाफल्यं देहिनामिह जन्मसु। प्राणैरर्थैर्धिया वाचा श्रेय एवं समाचरे'दिति। अत एव ये पुनः 'प्रायेण देव मुनयः स्वविमुक्तिकामाः,—मौनं चरन्ति विजने न परार्थनिष्ठा' स्तेऽपि भागवतैर्विगीता एव।

लोकाभ्युदयसाधनानां कर्मणां स्वभावत एव प्रीतिहेतूनां धर्मत्वाङ्गीकारे, शिष्टपरम्पराक्रमेण प्रवर्त्तिते वैदिकाचारे क्वचित् क्वचित् कालधर्माद्यनुरोधात् सन्देहे जाते, को नाम भागवतैः कालाद्यधिकारानुगत्या धर्मस्थापकत्वेनाङ्गीकृतः? कैश्चिद्वादिभिः किञ्चिदभ्युदय-

करमिति विचारितमपि नान्ये प्रतिवादिनस्तत्तादृशमित्यनुमन्यन्ते। एवं बहुधा खलु विप्रतिपत्तिः प्रायेण सम्भवति। कस्तर्ह्युपायस्तत्र काले काले धर्मपरीक्षायां धर्मप्रतिष्ठायाञ्च ?

अस्यैव समाधाने भागवतधर्मस्य किमपि रुचिरं वैशिष्ट्यमुपलभामहे। धर्मसंशये जाते, धर्मविप्लवे प्रवर्त्तमाने, भगवान् स्वयमेवोद्धर्त्ता। शुद्धसत्त्वमयो हि भगवान्। निरवच्छिन्नशुद्धसत्त्वे सर्वकालोपयोगी, सर्व्वाधिकारोपयोगी, सनातनो वेदधर्म्मः सदैव स्फुरति। तत्रैव तस्य सर्व्वज्ञतावीजम्। सर्व्वास्ववस्थासु सृष्टिमर्य्यादाधारणाच्च तत्रैव तस्य सर्व्वशक्तिमत्तावीजम्। किञ्च जगति सर्व्वत्रैव सत्त्वं देहविशिष्टपुरुषरूपम्। शुद्धसत्त्वस्य तस्य भगवतः शुद्धसत्त्वमयविग्रहसम्भावनाप्यभ्युपगन्तव्यैव। संसारचित्रेऽस्मिन् जीवदेहेष्वनन्तं वैचित्र्यम्। शुद्धसत्त्वे तस्मिन् शुद्धसत्त्वमयविग्रहस्याप्यनन्तं वैचित्र्यं स्वत एव सिध्यति। यत्र यत्र तत्सत्त्वं तत्र तत्रैव तस्य तथाधिष्ठानम्। जगति सर्वसत्त्वान्तराले तत् सत्त्वम्। सर्वत्रैव ततो नितरां भगवद्विग्रहस्यानन्तरूपस्य स्वतःप्रकाशरूपं स्वमहिम्नि प्रतिष्ठितं परिस्फुरणं वेदितव्यम्। किन्तु लीलाशक्त्यैव सच्चिदानन्दस्य स्वरूपप्रच्छादन्या मायामय्या तिरोहितप्रायमिदं जीवदृष्ट्या। तथापि सत्त्वं खलु स्वभावत एव प्रतिष्ठापकम्। सत्त्वशक्तिमाश्रित्यैव नियतं परिवर्त्तमानेऽपि संसारे नैव किञ्चिज्जातु स्वरूपत आत्यन्तिकतया नश्यति। वैज्ञानिकैरपि वस्तुनस्तिरोभावाविर्भावौ निरूप्य वस्तुशक्तेर्नियतवृत्तिता समर्थ्यते। अनया दिशा जगतः स्थितौ यदा यदैव विप्लवो घटेत, तदा तदैव परमात्मनः श्रीभगवतः स्वरूपविशेषस्य कालाद्युपयोगितानुरोधात् सत्त्वशक्त्यैव मायावरणं विभिद्य बहिःस्फुरणं सम्पद्येत। तदेव स्फुरणमवतार इति संज्ञायते। विप्लवानामानन्त्यादवताराणामप्यानन्त्यम्। अत एवोक्तं पारमर्षसंहितायाम् 'अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजा' इति। अवतारविशेषैश्च जगतः स्थितिसाधनाय धर्मरक्षायै

यद् यत् समुपदिष्टं, शुद्धसत्त्वाश्रयात् तत्तद् एव धर्म्म इति भागवतानामुपादेयम्। तत्तद्वाक्येषु कालाद्युपयोगिसनातनवेदधर्म्मविशेषाणामेवान्तर्भाव इति पूर्ववर्णितयुक्तिरीत्यैव ज्ञातव्यम्। अवतारा एव युगधर्म्मस्थापका इति भागवतानां सिद्धान्तः। कलौ नष्टधर्म्मसेतूनां सम्यक् सन्दर्शनाय भगवतैव श्रीनारायणर्षिरूपिणा प्रवर्त्तितं श्रीभागवतं शास्त्रमिति भागवता मन्यन्ते। श्रीभागवतपर्य्यालोचनया स्वसंवित्संवादेन तदनुमतमेव भक्तिरसरसिकानां विचारकवर्य्याणाम्।

एवंविधे भगवति भक्तिभावे समुन्मीलिते पुरुषस्य दुराग्रहः स्वत एव तिरोभवति। जीवे जीवे भगवदंशभावनादार्ढ्येन सोदररूपेणैव पूज्यतादिबुद्धिरुपचीयते। सर्व्वत्र भगवतो नियन्तृतया सर्व्वाध्यक्षरूपेण च स्थितिः स्फुटतरमुपलक्ष्यते। ततश्च तदनुनोदनया जगतामाभ्युदयिकेषु कर्म्मसु स्वत एव प्रणोदना सिध्यति। किमन्यदाशास्यं शिष्टानाम्?

भागवतप्रधानेषु पुराणेषु सुप्रतिष्ठितोऽप्ययं धर्म्मः कालवशाद्भारते विक्षोभितप्रायो विचिकित्सास्पदतामुपागमत्। कैश्चिद् यज्ञादिकर्म्मणामुच्छेदमाशङ्क्य, कैश्चिच्चावतारवादाश्रयणे यस्य कस्याप्यवतारत्वाङ्गीकारेण महानर्थप्रसङ्गभिया, बहुश आक्षिप्तं भागवतं मतम्। विचलितप्राये चैवं भक्तिमूलककर्म्मतन्त्रे ज्ञानप्रधानानां सांख्यादितन्त्राणामेवोपादेयत्वमङ्गीकृतं बहुभिराचार्य्यवर्य्यैर्विशेषतस्तु लोकयात्राविक्षिप्तचित्तैर्निर्विण्णैः कर्मन्यासिभिः। एवं गते श्रीभगवान् शङ्कराचार्य्यः प्रादुर्भूय जगन्मिथ्यात्वमङ्गीकुर्व्वन् ब्रह्मसूत्रगतवेदान्तमतं बहुधा युक्तिविचक्षणतया व्याख्याय प्रसङ्गतस्तत्पाञ्चरात्रिकं भक्तिवादं विगीतवान्। ज्ञानस्यैव केवलस्य तत्त्वत्वे तदध्यारोपितस्य मायामयस्य जगतो मिथ्यात्मकत्वमेव सर्वथा प्रतिपादनीयम्। जीवस्यापि मायोपाधिग्रस्तत्वात् तस्य कर्म्मतन्त्रमपि मायानुयन्त्रितमेव। विज्ञानविलसितस्यास्य निखिलस्यावधिभूते ब्रह्मणि समाधिरेव श्रेयान् धर्म्मः। अवधिपरि-

ज्ञानाय चित्ते दुर्विलसिते रजस्तमोभ्यामुपहतस्य सत्त्वस्य विशुद्धये केवलं कर्म्मतत्त्वोपयोगिता। तच्च तत्त्वं मन्त्रब्राह्मणादिबोधितमेव, नान्यत्। एवं गते कालक्रमेण वैष्णवाचार्य्या भागवतमतव्याख्यान-कुशलाः प्रादुर्भूय भक्तिवादस्य पुनरुज्जीवनं विदधिरे।

पञ्चरात्रागमोपदिष्टस्य भागवतमतस्य प्रचारात् परमासन् खलु तन्मतव्याख्यातॄणां चत्वारो मुख्याः सम्प्रदायाः। ते खलु परमगुरु-नामग्रहणरीत्या श्री-रुद्र-ब्रह्म-चतुःसन-नामभिरभिहिताः। भगवान् श्रीरामानुजाचार्य्यः श्रीसम्प्रदायमङ्गीकृत्य चिन्मयरूपस्यापि भगवतो लीलावशाद् द्विधा विशेषोपगमाच्चिदचिद्विशिष्टं ब्रह्मेति निरणैषीत्। भागवतदिशा च जीवानां भगवत्कैङ्कर्य्यं भगवतश्च वात्सल्यैकरसत्वं तथा मङ्गलनिदानत्वं तेन प्रतिपादितम्। श्रीमध्वाचार्य्यचरणास्तु ब्रह्मसम्प्रदायमङ्गीकृत्य परमेश्वरस्य शक्तिविलसितस्य जीवस्य जड़स्य च शक्तिपरिणामभेदात् परस्परं नित्यभेदं प्रतिपादितवन्तः। एवं सति कैङ्कर्य्याभिमाने सर्व्वनाशकरी तदेकताबुद्धिर्नैव प्रसज्येतेति तस्याशयः। श्रीविष्णुस्वामिपादैः पुनः रुद्रसम्प्रदायमङ्गीकृत्य श्रीशङ्कराचार्य्यव-ज्जगतो मायाकार्य्यत्वं जीवस्य च तन्माया-वश्यत्वं प्रतिष्ठापितम्। उक्तञ्च तैः 'स ईशो यद्वशे माया स जीवो यस्तयार्द्दित' इति। किञ्च परमेश्वरस्य माययैव जीवः स्वाविद्याबलाद्विपर्य्यस्ते जगति द्वैतबुद्धा-वभिनिवेशवान् पारक्यबुद्धिमूलक-भयशोकैरभिभूयते। यथोक्तं तेन—

> स्वादृगुत्थविपर्य्यास-भवभेदज-भीशुचो।
>
> यन्मायया जुषन्नास्ते तमिमं नृहरिं नुमः॥

तथापि तन्मते मायापि ब्रह्मैव, जीवोऽपि ब्रह्मैव, सर्व्वं खल्विदं ब्रह्म, शुद्धसत्त्वभावस्य सर्व्वव्यापित्वात् सर्व्वाधिष्ठानत्वात्। एवं तेन जगतो मिथ्यात्वं सत्यत्वञ्च दृष्टिभेदाद्विभाजितम्। ततश्च जीवानां जग-न्मिथ्यात्वभावनावशात् परमेश्वरैकशरणत्वं सुगमम्। जगत्सत्यत्वभाव-नया च जगन्मङ्गलकर्म्मनियोगश्च भगवत्कैङ्कर्य्यात् तस्य सिध्यत्येव।

श्रीवल्लभाचार्य्यपादास्तन्मतानुप्रवेशिनोऽपि रूढ़ारूढ़चिच्छक्तिवशा-च्छीलाधिकृतानां जीवजड़ानां शुद्धसत्त्वापेक्षया सत्यत्वमेव पारमार्थिक-मिति सप्रमाणीकृतवन्तः। श्रीमन्निम्बार्कचरणाः सनकादिसम्प्रदाय-मङ्गीकृत्य चिदचिद्विशेषाणां निमित्तभूते ब्रह्मणि तत्तद्विशेषातिक्रान्तं निर्विशेषं सत्त्वं शुद्धविग्रहमयं प्रतिपाद्य भेदाभेदवादस्य समाधानं चक्रुः। अतः परं माध्वमते स्थितैरपि श्रीकृष्णचैतन्यचरणैः शक्ति-शक्तिमतोर्भेदाभेदभावनयाऽचिन्त्यभेदाभेदमाश्रित्य व्याख्यातं भागवतं मतम्।

एवं सम्प्रदायभेदेऽपि वैष्णवाचार्य्यैर्जगत्तत्त्वस्य कर्मस्वभावस्या-किञ्चित्करत्वं निरस्तम्। कर्मक्षेत्रेऽस्मिन् कर्मसु प्रवृत्तैर्मानवैर्न कदा-चिद्भगवतः सर्वक्षेत्रेषु नित्यजागरूकत्वं विस्मरणीयमिति तेषां विधि-निषेधाधिकारे कर्मतन्त्रे मुख्यः समुपदेशः। यदेव भगवतः सर्व-व्यापित्वभावनानुगुणं तदेव विहितमन्यन्निषिद्धम्। उक्तं हि वैष्णवानां सर्वेषामुपजीव्ये पञ्चरात्रागमे—

'स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित्।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः' ॥ इति शम्।

———

## छत्रतत्त्वम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—कविराज-श्रीवसन्तकुमारविद्यारत्नः ]

अथ पञ्चोनहस्तं तु महिषीयुवराजयोः।
सेनापति-सुराध्यक्ष-सांवत्सरपुरोहितैः ॥८
पञ्चहस्तस्तु कर्त्तव्यश्छत्रदण्डो भृगूत्तम।
चतुर्हस्तस्तु कर्त्तव्यो मया ये तु न कीर्त्तिताः ॥९

व्यासो दण्डार्धमानेन सदा छत्रस्य शस्यते।
छत्रं विभूषयेद्राज्ञां त्वर्धचन्द्रदिवाकरैः ॥१०

राजेन्द्रनीलैः स्फटिकैश्च राम वैदूर्य्यमुक्ताफलसत्प्रवालैः।
विभूषितं रश्मियुतं प्रशस्तं सदातपत्रं तु महीपतीनाम् ॥११

भोजराजीये युक्तिकल्पतरौ छत्रं द्विविधमुक्तम्। यथा—

विशेषश्चाथ सामान्यं छत्रस्य द्विविधा भिदा।
राज्ञश्छत्रं विशेषाख्यं सामान्यमन्यदुच्यते ॥

तयोः सामान्यविशेषयोर्मध्ये छत्रं पुनर्द्विधा विभक्तम्। यथा—

सदण्डश्चाथ निर्दण्डं तज्ज्ञेयं द्विविधं पुनः।
सदण्डं तत्र विज्ञेयं सारणाकुञ्चनात्मकम् ॥

सदण्डं—दण्डेन सह वर्त्तमानम्, निर्दण्डं—दण्डहीनम्। सदण्डं छत्रं यथाभीष्टं प्रसार्य्य आकुञ्च्य च व्यवह्रियते, आधुनिकच्छत्रवत्। निर्दण्डं छत्रम् आकुञ्चनप्रसारणवर्जितम् शिल्पनैपुण्यविहीनम्। अत्र छत्रविषयेऽपि युगधर्मोऽतिरिच्यते। यतो युगप्रभावादचेतनस्यापि छत्रस्याङ्गानि ह्रस्वानि अभूवन्।

दिगष्टषट्चतुर्हस्तदीर्घो दण्डो युगक्रमात्।

अर्थात् सत्ययुगे दण्डो दशहस्तप्रमाणः, त्रेतायां अष्टहस्तप्रमाणः, द्वापरे षड्हस्तप्रमाणः, कलौ च चतुर्हस्तप्रमाणोऽभवत्। युगक्रमात्। छत्रस्याङ्गानि यथा—

दण्डः कन्दः शलाकाश्च रज्जुर्वस्त्रञ्च कीलकम्।
षड्भिरेतैः ससन्दिष्टैश्छत्रमित्यभिधीयते ॥

अत्र दण्ड-कन्द-शलाका-रज्जु-वस्त्र-कीलकानां छत्रनिर्माणे सम्भूयकारित्वं ज्ञेयम्। छत्रस्य षडङ्गानि यथा—

१ दण्डः—दिगष्टषट्चतुर्हस्तदीर्घो दण्डः।

२ कन्दः—षड्वाणवेद-नयन-वितस्त्या कन्द उच्यते। वाणः—५

वेद:—४ नयनम्—२ वितस्तिः विस्तृत-सकनिष्ठाङ्गुष्ठः। द्वादशाङ्गुलः इत्यमरः।

३ शलाकाः—'शतान्यशीतिः षष्टिश्च चत्वारिंशद् युगक्रमात्।', सत्ययुगे—१००, त्रेतायां—८०, द्वापरे—६०, कलौ—४० शलाका—आयामः—'शलाकाः षट्पञ्चवेदत्रिहस्तैः सम्मिता क्रमात्'।

४ रज्जुः—नवभिस्तन्तुभिः सूत्रं सूत्रैस्तु नवभिर्गुणः। गुणैस्तु नवभिः पाशो रश्मिस्तैर्नवभिर्भवेत्। 'नवाष्टसप्तषट्संख्यै रश्मिभी रज्जवः क्रमात्।' ९ तन्तुभिः—१ सूत्रम्, ९ सूत्रैः—१ गुणः, ९ गुणैः—१ पाशः, ९ पाशैः—१ रश्मिः।

५ कीलकः—भानुदिग्ग्रहवसुभिरङ्गुलीभिस्तु कीलकः।
षण्णां यन्मानमुदितं तद्राज्ञामिव भूतये॥

भानुः—१२, दिक्—१०, ग्रहः—९, वसुः—८।

६ वस्त्रम्—'वस्त्रं शलाकाद्विगुणम् आयामेन प्रतिष्ठितम्।'

अथोत्सवविशेषे राज्ञा व्यवह्रियमाणानां विशिष्टच्छत्राणां नामानि निर्माणपद्धतिश्च। यथा—राज्ञः प्रसादं नाम छत्रम्।—

विशुद्धकाष्ठस्य तु दण्डकन्दौ तथा शलाका अपि शुद्धवंशजाः।
रज्जुश्च रक्ता वसनञ्च रक्तं छत्रं प्रसादं नृपतेर्वदन्ति॥

युवराजस्य प्रतापं नाम छत्रम्,—

नीलो दण्डश्च वस्त्रञ्च शिरः कुम्भस्तु कानकः।
सौवर्णं युवराजस्य प्रतापं नाम विश्रुतम्॥

राज्ञः काष्ठनिर्मितं छत्रम्।

चान्दनौ दण्डकन्दौ चेत् सुशुक्ले रज्जुवाससी।
छत्रं मनोहरं राज्ञां स्वर्णकुम्भोपशोभितम्॥

कनकदण्डं नाम सर्व्वार्थसाधकं छत्रम्—

कानकौ दण्डकन्दौ तु शलाकाऽपि च कानका।

शुक्लानि रज्जुवासांसि स्वर्णकुम्भस्तथोपरि ॥
इदं कनकदण्डाख्यं छत्रं सर्व्वार्थसाधकम् ॥

विवाहकाले अभिषेककाले च व्यवहार्य्यं नवदण्डाख्यं नाम छत्रम् ।

दण्डकन्दशलाकाश्च शुद्ध-स्वर्णेन निर्मिताः ।
कीलकं स्वर्णघटितमशुक्लंरज्जुवाससी ।
कुम्भादिरथ हंसादिश्चामरादिर्य्यथाक्रमम् ॥
कुम्भादावथ हंसादौ नवरत्नानि रचयेत् ।
द्वात्रिंशन्मौक्तिकी माला द्वात्रिंशत्तत्र दापयेत् ॥
सर्व्वोपरि ब्रह्मजातिं विशुद्धं हीरकं न्यसेत् ।
दण्डान्ते कुरुविन्दांश्च पद्मरागांश्च विन्यसेत् ॥
स्वामिहस्तैकमानेन चामरः सित इष्यते ।
इत्ययं नवदण्डाख्यं छत्रं राज्ञो महीभुजाम् ॥
अभिषेके विवाहे च ग्रहाणां प्रीतिवर्द्धनः ।
पताका नवदण्डाग्रे राज्ञोऽष्टाङ्गुलिसम्मिताः ॥

अथ कुम्भादिः,—

कलशो दर्पणश्चन्द्रः पद्मकोषो यथाक्रमम् ।
ब्रह्मक्षत्रियविट्शूद्रजातीनां नवदण्डके ॥
हंसश्चाषः शुकः केकी व्याघ्रः सिंही गजो हयः ।
आदित्यादि-दशाजानामिति स्युर्नवदण्डगाः ॥
चामरश्चाषपत्राणि चित्रवस्त्राणि च क्रमात् ।
जाङ्गलादि महीन्द्राणां भवन्ति नवदण्डके ॥
शुक्लरक्तपीतनीलं वस्त्रमण्डपसंस्थितम् ।
शुक्लवर्णवस्त्रं सर्व्वेषामुपरि प्रणिधीयते ॥
शुक्ला रक्ता पीत-नीलाः पताकाश्चापि रज्जवः ।
चामराणां वर्णभेद एवमेव प्रकाशितः ॥
नानावर्णस्तु सर्व्वेषां सर्व्वत्रैवोपयुज्यते ।

अर्कवद्धाभिधो विप्रश्चटवद्धस्तु क्षत्रियः।
तपवद्धस्तु वैश्यः स्याद् यशोवद्धस्तु शूद्रकः।
अन्यानि यानि छत्त्राणि विविधाकृतिमन्ति च।
तानि चित्तप्रमोदार्थं कार्य्याणि चित्रयन्त्विदम् ॥
नवदण्डोऽभिषिक्ते च वारे कनकदण्डयोः।
मनोहरं प्रयाणेषु छत्त्रं भोजस्य सम्मतम्।
मनोहरं श्रीकनकदण्डञ्च नवदण्डकम्।
छत्त्रञ्च त्रिविधं ज्ञेयं त्रिविधानां महीभुजाम् ॥
मण्डलेशश्च राजा च चक्रवर्त्ती च यो नृपः।
आनूपो जाङ्गलो देशः साधारणगतिस्त्रिधा ॥
देशत्रयाधीश्वराणां छत्त्रत्रयमिदं क्रमात् ॥

दण्डनियमस्तु अन्यत्र।

चम्पकः पनसः शालः श्रीफलश्चन्दनस्तथा।
वकुलश्चाथ निम्बश्च वज्रवारणमित्यपि ॥

वज्रवारणम्—वज्रवारका बहवः सन्ति, यथा वृक्षेषु—स्नुही नारीकेलः तुलसी च। एतान् गृहोपरि आर्य्याः प्राची रचितवन्तः। लोहे—अयस्कान्तचुम्बकौ त्रिशूलाकारौ। एवं मन्त्रेषु,—

मुनेः कल्याणमित्रस्य जैमिनेरपि कीर्त्तनात्।
विद्युदग्निभयं न स्यात् स्थापिते च गृहोदरे।
प्रचण्डपवनाघाते निर्घोषे स्तनितेऽपि च।
त्रिः पठेत् जैमिनिन्तत्र प्राङ्मुखो वा ह्युदङ्मुखः ॥
जैमिनिश्च सुमन्तुश्च वैशम्पायन एव च।
पुलहः क्रतुपुलस्त्यौ षड़ेते वज्रवारकाः ॥
रामं स्कन्दं हनूमन्तं वैनतेयं वृकोदरम्।
ये स्मरन्ति विरूपाक्षं न तेषां विद्युतो भयम् ॥

इति योगविज्ञानशास्त्रे।

आदित्यादिदशाजानां दण्डकाष्ठाष्टकं विदुः ।
चान्दनञ्छत्रदण्डस्तु सर्व्वेषामेव युज्यते ॥
विशुद्ध-कोणधारं हि तद्वज्रं वज्रधारणम् ॥

इति सदण्डलक्षणम् ।

अथ निर्दण्डलक्षणम्,—

निर्दण्डं दण्डरहितं समाकुञ्चनवर्जितम् ।
मणीनामथ वस्त्राणां निर्णयन्तु सदण्डवत् ॥
मुख्यं जघन्यं द्विविधं तत्र मुख्यमिहायतम् ।
जघन्यं वलयाकारं तयोर्मानं यथा लघु ॥
दीर्घस्य मानं निर्दिष्टं भानुदिङ्नवमुष्टिभिः ।
वलयस्य हि निर्दिष्टं तावतीभिर्वितस्तिभिः ।
इति प्रोक्तो विशेषस्य विशेषो भोजभूभुजाम् ।
इत्थं विचार्य्य यो राजा राजतन्त्रं समाचरेत् ।
स चिरं पाति वसुधां धनसम्पत्ति-ऋद्धिमान् ॥
अज्ञानादथवा मोहाद् योऽन्यथा छत्रमाचरेत् ।
सोऽचिरान्मृत्युमाप्नोति भयं रोगं कुलक्षयम् ॥
विधानशून्यं छत्रन्तु मस्तकोपरि भूपतिः ।
यो धत्ते तस्य दुर्बुद्धेर्लक्ष्मीकुलबलक्षयः ॥

इति विशेषच्छत्रोद्देशः ।

कुञ्चनाद्दण्डछत्रस्य छत्रं सामान्यमुच्यते ।
निर्दण्डञ्च सदण्डञ्च छत्रन्तु द्विविधं विदुः ॥
आयामपरिणाहाभ्यां नवमुष्टिमितं हि तत् ।
इदं हि सर्वतोभद्रं सर्वेषामुपयुज्यते ॥
एकैकमुष्टिवृद्ध्या तु यावद्विंशतिमुष्टिकम् ।
मेषादिलग्नजातानां नृणां छत्रमिदं क्रमात् ॥

अथ सदण्डम्,—

आयामपरिणाहेन हस्तद्वयमिदं हि यत्।
स चतुर्हस्त-दण्डाढ्यो दण्ड-छत्त्रीति गद्यते॥
सर्वेषां सुखसम्पत्त्यै सर्वत्रैवोपयुज्यते।
एकैकवृद्धया मुष्टिस्तु छात्त्रदण्डे वितस्तयः॥
ब्रह्मक्षत्रियविट्शूद्रजातीनां क्रमतो विदुः॥

क्रमनियमस्तु तथैव।

शलाका-वस्त्र-दण्डादि-वर्णः पूर्ववदिष्यते।

भोजोऽपि,—

लघुता दीर्घता चैव दण्ड-सूत्रौ गुणग्रहः।
इत्थं विचार्य्य यः कुर्य्यात् मानवश्छत्त्रमात्मनः॥
स लक्ष्मीं विजयं कीर्त्तिं प्रतापञ्चाभिविन्दति॥
यो मोहादथवा दम्भात् कुरुते छत्त्रमन्यथा।
स विषीदति भोजस्य वाक्यमेतदसंशयम्॥

इति भोजराजीये युक्तिकल्पतरौ।

प्रबन्धेनैतेन प्राचीनकालेऽपि अस्मद्देशे छत्त्रव्यवहाररीतिरासीत्रवेति नास्ति सन्देहावसरः। किन्तु बहवः अज्ञानवशात् बहवश्च स्वशास्त्रपरिपन्थिनः पाश्चात्त्यशिक्षाक्रमादत्र प्रत्ययं न दधते, परन्तु देशान्तरादानीता सेयं छत्त्रव्यवहाररीतिरित्यामनन्ति। आशास्महे प्रबन्धोऽयं भ्रममपाकृत्य तेषां विश्वासनिदानं स्यात्। इति शम्।

———

# शिवाजिचरितम्

( पूर्वतोऽनुवृत्तम् )

[ निबन्धकः—श्रीकालिदासविद्याविनोदः ]

सुन्दरैः काशकासारैश्चामरच्छत्रशोभिता ।
जयाय शरदायाता राजलक्ष्मीरिवापरा ॥१

तां वीक्ष्य शरदं राजा शिवाजिः सर्वतोमुखान् ।
सैन्यानामन्वया मास सेनापतिपुरःसरान् ॥२

भोः भोः सैन्याश्च सेनान्यः समवेत समाहिताः ।
पत्रपुष्पफलोपेतां शरदं पश्यतादृताः ॥३

हिन्दूनां भारतीयानां शारदार्चा-महोत्सवः ।
अद्यप्रभृति सर्वत्र विजयां दशमीमभि ॥४

धर्मघ्नरावणबधाद्रामचन्द्रजयप्रदः ।
दुर्गोत्सवः प्रतिगृहे पूर्वस्मृतिविधायकः ॥५

वयमप्यद्यतः सर्वे प्रतापगड़माश्रिताः ।
भवानीमर्चयिष्यामो भव्यदां भयनाशिनीम् ॥६

विजापुरपतेः सेनापतिरत्यन्तदुर्मदः ।
आफ्‌जाल्‌खा हिन्दुविद्वेषी धर्मनाशव्रते स्थितः ॥७

अभियास्यन् समामेव पथि देवगृहान् बहून् ।
आबालवृद्धवनिता हिन्दुजातीश्च सर्वशः ॥८

विनाश्य निर्ममो गाश्च तुलजा-पुरमाश्रयन् ।
भवानीमन्दिरध्वंसाद् इस्‌लामोपासनागृहम् ॥९

तत्र निर्माय बहुधा हिन्दुजातीर्निपीड़यन् ।
'प्रतापगड़'दुर्गेऽस्मिन् समायातः ससैनिकः ॥१०

सन्नद्धाः सायुधाः सर्वे यूयं तिष्ठत निर्भयाः ।
विधातृप्रेरितो नूनं पशुरेष भविष्यति ॥११
सन्धिपूजाक्षणे शत्रु-बलिदानं महाफलम् ।
समाधिमधिगच्छामि देवीं ध्यायन्ननन्यधीः ॥१२
सम्मुखेनाह यद्देवी तत्सर्वमनुपूर्वशः ।
लिखल्लेकः कर्मचारी पश्चान्मां वाचयिष्यति ॥१३
इत्यादिश्य समाधानं शिवाजिः कृतवान् यतः ।
भवानी तन्मुखेनैवमुवाच परमेश्वरी ॥१४
मा भैस्त्वमभयं प्राप्तः सदा तिष्ठामि ते हृदि ।
अद्यप्रभृति ते वत्स ! हिन्दुसाम्राज्यमुन्नतम् ॥१५
वर्णाश्रमाचाररक्षाकरमेतद् भविष्यति ।
द्वात्रिंशद्-दन्तसंयुक्तः पशुरेष समाहृतः ॥१६
एनं जहि महाराज ! जयस्ते भविता ध्रुवः ।
आफ्जाल्खा प्रेरितो दूतस्तत्क्षणात् समुपस्थितः ॥१७
उपढौकनपत्राभ्यां निगूढ़-मन्त्रणो द्विजः ।
कृष्णाजिपन्थः सेनानीर्विप्रो गुणगणान्वितः ॥१८
स्वीय-सेनापते राज्ञां पत्रञ्चैकमुपाहरत् ।
पिता ते वत्स ! साहाजिरतिप्रियसुहृन्मम ॥१९
शिवाजे ! तस्य पुत्रस्त्वं पुत्रकल्पो मम ध्रुवम् ।
तवाभ्युदयकामोऽहं सन्धिवार्त्तामुपानयन् ॥२०
विजापुरपतेः स्थानात् प्रतापगड़मागतः ।
वत्स त्वमेहि शिविरे मम निर्भयमेव ते ॥२१
अकारण-प्राणिवधात् सन्धिः सर्वसुखावहः ।
शिवाजिरिति विज्ञाय दूतं पप्रच्छ पूजितम् ॥२२
त्वमेव ब्रूहि मे विप्र ! सत्यमेतच्छलं न वा ।
ब्राह्मणानाञ्च धर्मस्य देवार्च्चानां गवां तथा ॥२३

रक्षणाय धृतं शस्त्रं न ममान्यत् प्रयोजनम् ।
इत्युक्तो ब्राह्मणस्तुष्टम्फलमित्यब्रवीन्मृदु ॥ २४
ततः सशस्त्रेण मया गन्तव्यमिति निश्चितम् ।
कर्त्तव्यं सुविचार्य्यैवं शिवाजिरकुतोभयः ॥ २५
जिऊ-महाला-शम्भाजि-कावजि-नामकावुभौ ।
वीरौ सहायौ कृत्यैव आफ्जाल्खा शिविरं ययौ ॥ २६
आफ्जाल्खा दानवक्रूरः पत्रेण परिसान्त्वयन् ।
निमन्त्रयन् स्वशिविरे हन्तुमैच्छच्छलेन तम् ॥ २७
शिवाजिरपि मायावी निभृतास्त्रो निरस्त्रवत् ।
लौहवर्मावृततनुराफ्जाल्खा-सविधं-गतः ॥ २८
प्रथमालिङ्गने ह्रस्वकायमावध्य मस्तके ।
आफ्जाल्खास्ताड़यन् पार्श्वे शिवाजिमुददीपयत् ॥ २९
शिवाजिराहतस्तेन यमदंष्ट्रेण तत्क्षणात् ।
हृदि विध्यन् जघानैनं आफ्जाल्खां दस्युरूपिणम् ॥ ३०
हते तस्मिन् महावीरे तत्सैन्या योद्धुमागताः ।
शिवाजिसैन्यैर्निहताः सर्वे यमपुरं गताः ॥ ३१

प्रथमविजयतुष्टा हृष्टपुष्टाः स-भृत्या
नृपसविधमुपेताः सैनिका मन्त्रिणश्च ।
सकल-जगदशेषश्रेयसे जागरूकां
वयमिह समवेताः पूजयामो भवानीम् ॥ ३२

इति चतुर्थः सर्गः ।

———

# हर्षचरितम्

## ( पूर्व्वानुवृत्तम् )

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्य्यः (परिषच्छात्रः) ]

अधुना गद्यसाहित्यसम्राजा धीमता वाणभट्टेन कति पुस्तकानि तावद्विरचितानि, तदेवालोचयितुमिच्छामि। नृपायते खलु तस्य कादम्बरी अद्यापि निखिलसंस्कृतगद्यबन्धेषु। हर्षचरितं नाम या चाख्यायिका तेन निर्म्मिता, सापि न निन्दनीया। समसामयिको नूनमासीत् मयूरो वाणभट्टस्य, एवमपि श्रूयते, स किलासीत् श्वशुरो वाणस्येति। वाणमयूरयोः समसामयिकत्वद्योतकौ श्लोकौ अधो विलिख्येते।

"अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत् सभ्यः समो वाणमयूरयोः॥
सचित्रवर्णविच्छित्ति-हारिणोरवनीपतिः।
श्रीहर्ष इव सङ्घट्टं चक्रे वाणमयूरयोः॥

स च मयूरः सूर्य्यशतकं विलिख्य कुष्ठरोगान्मुक्तो जातस्तेनोपजातेर्ष्येण वाणेनापि महिषासुररक्तवीजशुम्भनिशुम्भादिविघातनीं साधकाभीष्टदां नित्यानन्दस्वरूपाम् इष्टां चण्डिकाम् उद्दिश्य कृतं 'चण्डिकाशतकम्' इति नाम्ना मनोज्ञमेकं स्तोत्रम्। कालिदासेऽपि वाणस्यासीत् महती भक्तिः—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुर सान्द्रासु मञ्जरीष्विव जायते॥"

इति तद्वचनमेव तत्परिचायकम्। अतो मन्ये कविना वाणभट्टेन 'पार्व्वतीपरिणयं' नाम रूपकं कालिदासकृतकुमारसम्भवविषयं समा-

श्लेव प्रणीतं भवेत्। त्रिविक्रमभट्टपादकृत-नलचम्पू-व्याख्यातृभ्यां चन्द्रपाल-गुणविनयाग्निभ्यामपरस्य कस्यापि मकुटताड़ितकाभिधेयस्य वाणनाटकस्योल्लेखः कृतः, यत्र प्रवर्त्ततेऽयं श्लोकः—

"आशाः प्रोषितदिग्गजा इव गुहाः प्रध्वस्तसिंहा इव
द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव।
बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां
जाताः क्षीणमहारथाः कुरुपतेर्देवस्य शून्याः सभाः॥

नाटकस्यास्यापरः कोऽपि वृत्तान्तोऽस्माभिर्न लभ्यते। गद्यकादम्बरीं विहाय वाणः पद्यकादम्बरीमपि काञ्चित् लिलेखेत्यत्र क्षेमेन्द्रवचनमेव प्रमाणायोपकल्पते। क्षेमेन्द्रस्तु पद्यकादम्बर्य्या यं श्लोकम् उद्धृतवान् स एवात्र सभ्यानां सविधे समुच्चार्य्यते।

"हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः।
यस्येन्धनानि सरसानि च चन्दनानि
निर्व्वाणमेष्यति कथं स मनोभवाग्निः॥"

केषाञ्चिद् विदुषां मते रत्नावली नाटिका वाणविरचिता। परं तन्न युक्तिसहमिति मया भीतभीतेन सभ्यानां सविधे विज्ञाप्यते। रत्नावली-नागानन्द-प्रियदर्शिकाख्यानि रूपकाणि श्रीहर्षसम्पादितानि। एतेषां रूपकत्रयाणां प्रस्तावनाप्रकारोऽपि सम एव। तथापि किमर्थं तैः केवलं रत्नावल्याः प्रणेतृत्वं वाणभट्टे व्यवस्थापितमिति विनिश्चेतुं नास्मयलम्। काश्मीरकविकण्ठाभरणेन कण्ठाभरणादिपुस्तकप्रणेत्रा क्षेमेन्द्रेण स्वकीयेषु ग्रन्थेषु रत्नावलीस्थिताः कतिपयाः श्लोका उदाहरणदानावसरे प्रदत्तास्तेषां कर्त्तृत्वं च श्रीहर्षस्येति तारमुद्घोषितञ्च। अधस्ते संकीर्त्यन्ते—

विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन् प्रियवसन्तक एव साक्षात्।

पर्य्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति ॥ ( प्रथमाङ्के )

कण्ठे कृत्वावशेषं कनकमयमधः शृङ्खलादाम कर्षन्
क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः ।
दत्तातङ्कोऽङ्गनानामनुसृतसरणिः सम्भ्रमादश्वपालैः
प्रभ्रष्टोऽयं प्लवङ्गः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥

नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्जनस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः
कृशाङ्ग्याः सन्तापं वदति नलिनीपत्रशयनम् ॥ (द्वितीयाङ्के)

एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शङ्करोऽयं
दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवदेवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्य्यः ॥

अतो नूनं रत्नावलीकर्त्ता श्रीहर्ष एव, न वाणभट्टः ।

काव्यन्तु त्रिविधं गद्यं पद्यं मिश्रञ्चेति । तच्चोक्तं दण्डिपादैः—
"पद्यं गद्यं च मिश्रं च तत् त्रिधैव व्यवस्थितम् ।" इति ।
पुनरपि तैरेवोक्तम्—

"अपादः पादसन्तानो गद्यमाख्यायिका कथा।"

इति तस्य प्रभेदौ द्वौ ······।

सम्प्रत्यस्माकम् इदम् एव विचारणीयं किं हर्षचरितं कथा उतवाख्यायिकेति। हर्षचरितप्रारम्भे बाणभट्टैरेवोक्तं—

"तथापि नृपतेर्भक्त्या भीतो निर्वहणाकुलः।
करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम्॥" इति

अतो हर्षचरितेन आख्यायिकया भवितव्यम्। आख्यायिकायास्तावत् किं लक्षणं, को वा तस्याः कथातो भेद इत्यपि नोपेक्षणीयमिति कृत्वा अत्र तद्विषये विवक्षुरस्मि किञ्चित्। कथाख्यायिकयोर्लक्षणदानावसरे दण्डिनोक्तम्,—

"तयोराख्यायिका किल
नायकेनैव वाच्यान्या नायकेनेतरेण वा।
स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः॥
अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।
अन्यो वक्ता स्वयं वेति कीदृग् वा भेदलक्षणम्॥
वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम्।
चिह्नमाख्यायिकायाश्चेत् प्रसङ्गेन कथास्वपि॥
आर्यादिवत् प्रवेशः किं न वक्त्रापरवक्त्रयोः।
भेदश्च दृष्टो लम्भादिरुच्छ्वासो वास्तु किं ततः॥
तत्कथाख्यायिकेत्येका जातिसंज्ञाद्वयाङ्किता।
अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः॥

एतेन किमपि न परिस्फुटं भवति।

'प्रकृतानुकूलश्राव्य' शब्दार्थपदवृत्तिना।
गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता॥
वृत्तमाख्यायते तस्यां नायकेन स्वचेष्टितम्।
वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च।'

इति प्राचीनतमालङ्कारिकाणां भामहमहोदयानां मतं, लक्षणेऽस्मिन् "वृत्तम्" इत्यादि चरणयुगलं व्यर्थम्। यतस्तथा सति आख्यायिका प्रविरलविषया निर्विषया वा स्यात्। विश्वनाथकृताख्यायिकालक्षणं मन्ये समीचीनम्। तद् यथा—

"आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्त्तनम्।
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित्॥
कथांशानां व्यवच्छेद आश्वास इति बध्यते।
आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्॥"

अत्र 'आश्वास' इति पदं केवलं दूषणीयम्, यतः सर्वेषामालङ्कारिकाणां मतेन उच्छ्वास एव कथांशव्यवच्छेदनाय। उच्छ्वासस्थाने आश्वास इति पदं व्यवहरता विश्वनाथेन न कोऽप्युत्कटदोषः कृतः, अतस्तल्लक्षणं न दुष्टम्। वस्तुतस्तु कथा कविकल्पिता, यथार्थघटनामयी चाख्यायिका।

"श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-
लङ्कारे कतिचित् सदर्थविषये चान्ये कथावर्णने।
आसर्व्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
सञ्चारी करिकुम्भिकुम्भभिदुरो वाणस्तु पञ्चाननः॥"

नायथार्थमिदं श्रीचन्दनदेववचनम्। वाणस्य चारित्रवर्णनकौशलं स्वाभाविकं, तत्र किञ्चिदपि अलौकिकत्वं न विद्यते। तारापीड़-शुकनास-चन्द्रापीड़-कादम्बरी-पत्रलेखा-विलासवत्यादीनां चारित्रं यथा सुष्ठु वर्णितं वाणेन, तादृग्वर्णनशक्तिर्मन्ये स्वल्पसंख्यकैरेव कविभिः प्रदर्शिता। पाश्चात्यकविकुलचूड़ामणिः सेक्सपीयरमहोदयस्य यथा स्त्रीचारित्रवर्णने अतिद्वयी शक्तिरासीत्, तथा मन्ये वाणस्यापि। आलङ्कारिकेषु च तस्यासीन्महती प्रीतिरिति कृत्वा "ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्" इति दण्डिवचनं तेन नान्यथा कृतम्।

समासबहुलेऽपि तस्य काव्ये रसहानिर्न जातेत्येव तस्य कवेरनन्यसाधारणं शक्तिपरिचायकम्। उपमोत्प्रेक्षापरिसंख्यादीनाम् अलङ्काराणां प्राचुर्यं दृश्यते अनवरतं तत्कृतिषु। सूक्ष्मदर्शी स चासीद् वाणभट्ट इति तु तत्कृत-हर्षचरितादिकाव्यकुक्षि-निलीन-राजसभा-साधारणविषयवर्णनादिना सम्यगुपलभ्यते। प्राणप्रियतरा तस्यासीत् स्वभावशोभा, अतः स्वभाववर्णनावसरो लभ्यते स्म चेत् तेन स कदापि न प्रत्याख्यायत। श्लेषबाहुल्याद् वाक्यसंश्लिष्टपौराणिकाख्यानबाहुल्याच्च तत्काव्यं अन्तरान्तरा क्लेशदायकमिति तस्यैको दोषः। अत्र महाकवेः कालिदासस्य—

> 'एको हि दोषो गुणसन्निपाते
> निमज्जतीन्दोः किरणेष्विवाङ्कः।'

इति वचनं स्मरद्भिः सहृदयैर्भवद्भिर्वाणभट्टः क्षन्तव्यः, निर्दोषस्यैकान्तमसम्भवात्। यथाह भवभूतिः श्रीकण्ठपदलाञ्छनः—

> सर्व्वथा व्यवहर्त्तव्यं कुतो ह्यवचनीयता॥
> यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः॥ इति

कविना प्रथमे वयसि विरचिता हर्षचरितमित्याख्याख्यायिका, अतस्तत्र कवेः कतिपयस्खलनं जातमिति विभाव्य कादम्बर्या साकं तां नार्हामस्तुलयितुम्। किमधिकं, कादम्बरीसमा कापि कथा संस्कृतगद्यसाहित्ये नास्तीत्यत्र नास्ति सन्देहविकाशः। वस्तुतस्तु हर्षचरितमपि नावरम्। इदमपि तावत् काव्यं संस्कृतगद्यसाहित्यगगनाङ्गनविकाशी दीप्तिमान् ग्रहविशेषः। किञ्च गद्यसाहित्यरत्नभूतस्यास्य काव्यस्य अन्यदपि किञ्चित् प्रशंसनीयं विद्यते। ऐतिहासिकदृष्ट्या समालोच्यते चेदस्य काव्यस्यामूल्यत्वमवश्यं स्वीकरणीयम्। भारते इतिहासस्य विद्यते सुमहान् अभावः। केवलमेतादृक्पुस्तकपठनेनैव भारतस्य विगतदिनविवरणादिकमस्माभिर्लभ्यते। विरलाः खलु एतादृशो ग्रन्थाः। उपक्रमणिकाश्लोकेभ्योऽपि अस्य काव्यस्या-

